# Document Information

Text title : veda mantra manjari - 3
File name : vedamantramanjari3.itx
Category : sUkta
Location : doc_veda
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Rekha Venkatesh
Proofread by : Rekha Venkatesh
Description-comments : Converted from BRH version
Latest update : December 29, 2014
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ वेदमन्त्रमञ्जरि - ३ ॥

## ॥ श्रीगणेशसूक्तम् ॥

ऋग्वेदसंहिता मण्डल-८, अष्टक-६, सूक्त-८१

ॐ आ तू न॑ इन्द्र क्षु॒मन्तं᳚ चि॒त्रं ग्रा॒भं सं गृ॑भाय । म॒हा॒ह॒स्ती दक्षि॑णेन ॥ १ ॥ वि॒द्मा
हि त्वा᳚ तुविकू॒र्मिन्तु॒विदे᳚ष्णं तु॒वीम॑घम् । तु॒वि॒मा॒त्रमवो᳚भिः ॥ २ ॥ न॒ हि त्वा᳚ शूर दे॒वा
न मर्ता᳚सो॒ दित्स᳚न्तम् । भी॒मं न गां वा॒रय᳚न्ते ॥ ३ ॥ एतो॒न्विन्द्रं॒ स्तवा॒मेशा᳚नं॒ वस्वः॑
स्व॒राजम्᳚ । न राध॑सा मर्धिषन्नः ॥ ४ ॥ प्र स्तो᳚ष॒दुप॑ गासिष॒च्छ्रव॒त्साम॑ गी॒यमा᳚नम्
। अ॒भिराध॑साजुगुरत् ॥ ५ ॥ आ नो᳚ भर॒ दक्षि॑णेना॒भि स॒व्येन॒ प्र मृ॑श । इन्द्र॒ मानो॒
वसो॒र्निर्भा᳚क् ॥ ६ ॥ उप॑क्रम॒स्वा भ॑र धृष॒ता धृ॑ष्णो॒ जना᳚नाम् । अदा᳚शूष्टरस्य॒ वेदः॑ ॥
७ ॥ इन्द्र॒ य उ॒ नु ते॒ अस्ति॒ वाजो॒ विप्रे᳚भि॒ः सनि॑त्वः । अ॒स्माभि॒ः सुतं सं॑नुहि ॥ ८
॥ स॒द्यो॒जुव॑स्ते॒ वाजा᳚ अ॒स्मभ्य᳚म् वि॒श्वश्च᳚न्द्राः । वशै᳚श्च म॒क्षू ज॑रन्ते ॥ ९ ॥ ग॒णानां᳚
त्वा ग॒णप॑तिं हवामहे क॒विं क॑वी॒नामु॑प॒मश्र॑वस्तमम् । ज्ये॒ष्ठ॒राजं॒ ब्रह्म॑णां ब्रह्मणस्पत॒
आ न॑ः शृ॒ण्वन्नू॒तिभि॑स्सीद॒ साद॑नम् ॥ १० ॥ नि षु सी᳚द गणपते ग॒णेषु॒ त्वामा᳚हु॒र्विप्र॑तमं
कवी॒नाम् । न ऋ॒ते त्वत्क्रि॑यते॒ किं च॒नारे म॒हाम॒र्कं म॑घवञ्चि॒त्रम॑र्च ॥ ११ ॥ अ॒भि॒ख्यानो᳚
मघव॒न्नाध॑माना॒न्त्सखे᳚ बो॒धि व॑सुपते॒ सखी᳚नाम् । रणं᳚ कृधि रणकृत्सत्यशु॒ष्माभ॑क्ते
चि॒दा भ॑जा रा॒ये अ॒स्मान् ॥ १२ ॥

॥ ॐ शान्ति॒ः शान्ति॒ः शान्तिः॑ ॥

## ॥ ऐकमत्य सूक्तम् ॥

ऋषिः संवननः आङ्गिरसः छन्दः अनुष्टुप् १,२,४ त्रिष्टुप् ३ देवता अग्निः १, सञ्ज्ञानम् २-४

ॐ संस॒मिद्यु॑वसे वृष॒न्नग्ने॒ विश्वा᳚न्य॒र्य आ । इ॒ळस्प॒दे समि॑ध्यसे॒ स नो॒ वसू॒न्या भ॑र ॥
१ ॥ सं ग॑च्छध्वं॒ सं व॑दध्वं॒ सं वो॒ मनां᳚सि जानताम् । दे॒वा भा॒गं यथा॒ पूर्वे᳚ सञ्जाना॒ना

उ॒पास॑ते ॥ २ ॥ स॒मा॒नो मन्त्र॑ः समि॑तिः समा॒नी स॑मा॒नं मन॑ः स॒ह चि॒त्तमे॑षाम् । स॒मा॒नं मन्त्र॑म॒भि म॑न्त्रये वः समा॒नेन॑ वो ह॒विषा॑ जुहोमि ॥ ३ ॥ स॒मा॒नी व॒ आकू॑तिः समा॒ना हृद॑यानि वः । स॒मा॒नम॑स्तु वो॒ मनो॒ यथा॑ व॒ः सुस॒हास॑ति ॥ ४ ॥
॥ ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ॥

## ॥ श्रद्धा सूक्तम् ॥

ऋषिः श्रद्धा कामायनी छन्दः अनुष्टुप् देवता श्रद्धा देवी
ॐ श्र॒द्धया॒ग्निस्समि॑ध्यते । श्र॒द्धया॑ विन्दते ह॒विः । श्र॒द्धां भग॑स्य मू॒र्धनि॑ । वच॒सा वे॑दयामसि । प्रि॒यग्ग् श्र॑द्धे॒ दद॑तः । प्रि॒यग्ग् श्र॑द्धे॒ दिदा॑सतः । प्रि॒यं भो॒जेषु॒ यज्व॑सु । इ॒दं म॑ उदि॒तं कृ॑धि । यथा॑ दे॒वा असु॑रेषु । श्र॒द्धामु॒ग्रेषु॑ चक्रि॒रे । ए॒वं भो॒जेषु॒ यज्व॑सु । अ॒स्माक॑मुदि॒तं कृ॑धि । श्र॒द्धां दे॑वा॒ यज॑मानाः । वा॒युगो॑पा॒ उपा॑सते । श्र॒द्धाग्ं हृ॑द॒य्य॑याऽकू॑त्या । श्र॒द्धया॑ हूयते ह॒विः । श्र॒द्धां प्रा॒तर्ह॑वामहे । श्र॒द्धां म॒ध्यन्दि॑नं॒ परि॑ । श्र॒द्धाग्ं सूर्य॑स्य नि॒म्रुचि॑ । श्रद्धे॒ श्रद्धा॑पये॒ हमा॑ । श्र॒द्धा दे॒वानधि॑वस्ते । श्र॒द्धा विश्व॑मि॒दं जग॑त् । श्र॒द्धां काम॑स्य मा॒तरम्॑ । ह॒विषा॑ वर्धयामसि ॥
॥ ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ॥

## ॥ स्वस्तिनोमिमीतां सूक्तम् ॥

ऋग्वेद संहिताः मण्डल-५, अष्टक-४, सूक्त-५१ ऋषिः स्वस्त्यात्रेय छन्दः त्रिष्टुप् १,२,३ अनुष्टुप् ४,५ देवता विश्वेदेवताः
ॐ स्व॒स्ति नो॑ मिमीताम॒श्विना॒ भग॑ः स्व॒स्ति दे॒व्यदि॑तिरन॒र्वण॑ः । स्व॒स्ति पू॒षा असु॑रो दधातु नः स्व॒स्ति द्यावा॑पृथि॒वी सु॑चे॒तुना॑ ॥ १ ॥ स्व॒स्तये॑ वा॒युमुप॑ ब्रवामहै॒ सोम॑ं स्व॒स्ति भुव॑नस्य॒ यस्पति॑ः । बृह॒स्पति॒ं सर्व॑गणं स्व॒स्तये॑ स्व॒स्तय॑ आदि॒त्यासो॑ भवन्तु नः ॥ २ ॥ विश्वे॑ दे॒वा नो॑ अ॒द्या स्व॒स्तये॑ वैश्वान॒रो वसु॑र॒ग्निः स्व॒स्तये॑ । दे॒वा अ॑वन्त्वृ॒भव॑ः स्व॒स्तये॑ स्व॒स्ति नो॑ रु॒द्रः पा॒त्वंह॒स॑ः ॥ ३ ॥ स्व॒स्ति मि॑त्रावरुणा स्व॒स्ति प॑थ्ये रेवति । स्व॒स्ति न॒ इन्द्र॑श्चा॒ग्निश्च॑ स्व॒स्ति नो॑ अदिते कृधि ॥ ४ ॥ स्व॒स्ति पन्था॒मनु॑ चरेम सूर्याचन्द्र॒मसा॑विव । पुन॒र्दद॒ताघ्न॑ता जान॒ता सङ्ग॑मेमहि ॥ ५ ॥
॥ ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ॥

# ॥ वैदिक राष्ट्रगीता ॥

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायातां दोग्ध्रीं धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ तैत्तिरीय संहिता ७।५।१८ ॥
॥ ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ चतुर् वेदमन्त्राणि ॥

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

इषे त्वोर्जेत्वा वायवस्थो पायवस्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयख्ष्मामावस्तेन ईशत माऽघशग्ं सो रुद्रस्य हेतिः परिवो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥
अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सथ्सि बर्हिषि ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥
॥ ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ वाक्सूक्तम् ॥

ॐ देवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना । धेनुर्वागस्मानुपसुष्टुतैतु । यद्वाग्वदन्त्यविचेतनानि । राष्ट्रीदेवानां निषसादमन्द्रा । चतस्र ऊर्जं दुदुहे पयाग्ंसी । क्वस्विदस्याः परमं जगाम । अनन्तामन्तादधि निर्मितां महीम् । यस्यां देवा अदधुर्भोजनानि । एकाख्खरां द्विपदाग्ं षट्पदां च । वाचं देवा उपजीवन्ति विश्वे । वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः पशवो मनुष्याः । वाची मा विश्वा भुवनान्यर्पिता । सा नो हवं जुषतामिन्द्रपत्नी । वागख्खरं प्रथमजा ऋतस्य । वेदानां माताऽमृतस्य नाभिः । सा नो जुषाणोप यज्ञमागात् । अवन्ती देवी सुहवा मे अस्तु । या मृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण । तां देवीं वाचग्ं

ह॒विषा॑ यजामहे । सा नो॑ दधातु सुकृ॒तस्य॑ लो॒के । च॒त्वारि॒वाक्परि॑मिता प॒दानि॑ । तानि॑ विदुर्ब्राह्म॒णा ये म॑नी॒षिण॑ः । गुहा॒ त्रीणि॒ निहि॑ता॒ नेङ्ग॑यन्ति । तु॒रीय॒ꣳ वा॒चो म॑नु॒ष्या॑ वदन्ति ॥

॥ ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ॥

Encoded and proofread by Rekha Venkatesh



.. Vedamantramanjari 3 ..
was typeset on April 10, 2015

Please send corrections to *sanskrit@cheerful.com*